Kashmir Series of Texts and Studies.

No. XXXI.

# SRÎ MĀLINIVIJAYA VÂRTTIKAM

OF

# ABHINAVA GUPTA

Edited with notes by

PANDIT MADHUSUDAN KAUL SHASTRI,
M. A., M. O. L.,
Superintendent Research Department,
JAMMU AND KASHMIR STATE,
SRINAGAR.

Published under the authority of the Government of
His Highness Lieut,-General Maharaja
SIR PRATAP SINGH SAHIB BAHADU
G C S I., G C.I.E , K G.C.B E., LL D.,
Maharaja of Jammu and Kashmir State-




Srinagar:
PRINTED AT THE "KASHMIR PRATAP STEAM" PRESS.
1921

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत्सर्ववन्द्यत्वमाप ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः



ग्रन्थाङ्कः ३१

# श्रीमालिनीविजयवार्तिकम्

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तपादविरचितम् ।

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

प्रत्नविद्याप्रकाश ( रिसर्च ) कार्यालये

तदध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

श्रीनगरे

"कश्मीर प्रताप स्टीम प्रेस" मुद्रणालये मुद्रापयित्वा प्रकाश्यमुपनीतम्




संवत् १९७७ खैस्ताब्दः १९२१

काश्मीर-श्रीनगर

# MĀLINIVIJAYOTTARAVĀRTTIKAM.

## PREFACE

**Mālinīvijayottaravārttikam** or **Mālinīvārttikam** is a gloss on **Mālinīvijayottara**, one of the foremost works probably on the *Purvàmnàya* or the Eastern School of the *Tantras* in the *Advaita system of Kashmir Saivaism.* It has been composed by *Mahàmáheswara Abhinavagupta-áchàrya* at the request of his two favourite disciples namely *Karna* and *Mandra.* The whole work has been thrown into two parts or *Kándas,* the first part being devoted to the subject matter dealt with in the first seventeen chapters in the above *Tantra* and the latter throwing light on the remaining portion. The *Várttikam* in question has got an inseparable connection with the above *Tantra* and is an indispensable guide in the field of *Tantric Literature.*

Two manuscripts, as detailed below, have been made use of in preparation of the present edition of this book ;—

(*a*). This *Ms.* belongs to the manuscript section of the SRI PRATAP SINGH PUBLIC

---

*Malinivijayottara Tantram most probably belongs to the PURV-AMNAYA as several authorities refer to it as PURVA-SASTRA, of Tantraloka Com. IX – PP. 56; also S. Sutra Vimar. Page 26. I Unme., Swacch. X Com; also Tantraloka Text 15, 35 46.

LIBRARY. This is one of the oldest *Mss.* in the stock. Its leaves are torn out here and there and number 250. The character in which the *Ms.* is written is *old Sáradá.* Kashmiri paper of old type, one-half Foolscap in size, has been used in the *Ms.* On an average, a page contains 13 lines with sixteen letters in each. The first 11 leaves of the *Ms.* seem to have been restored recently. The *Ms.* is complete with a few slips of pen. It does not bear any date. The colophon at the end of the book runs thus— ( प्रवरपुरनामधेये पुरे पूर्वे काश्मीरिकोऽभिनवगुप्तः । मालिन्यादिमवाक्ये* वार्तिकमेतद्रचयति स्म ॥ इति श्रीमालिनीश्लोकवार्तिकमाचार्याभिनवगुप्तविरचितं समाप्तम् ॥) *i. e.*, "The *Kasmirian Abhinava Gupta*, while living in the Eastern quarter of the city of *Pravarasena*, *viz.*, SRINAGAR, composed this gloss or *Vârttikam* on the first stanza of the *Màlinîvijayottaràtantra.* Thus ends the *Mălinî-slokavàrttikam* composed by *Achàrya Abhinava Gupta.*"

(b). This *Ms.* is on new Kashmiri paper. There is no mention of the date when the copy of the *Ms.* was made. It is complete and is written out in *Sáradá* character with a few mistakes here and there. It belongs to late PANDIT RAMADEVA BHATTARAKA son of

---

* जयन्ति जगदानन्दविपक्षक्षपणक्षमाः ।
परमेशमुखोद्भूतज्ञानचन्द्रमरीचयः ॥
1st Verse M.V. Tantra (Malinivarttikam, page 2)

PANDIT SUKADEVA of Srinagar, Kashmir, who lived the life of a *Saiva* teacher to the last day of his life.

In conclusion, I have to acknowledge my obligations to the Sanskrit and English staff of the Department, who have spared no pains in the way of correcting, collating and, in some places, deciphering the *Mss.* used in preparing this edition which I hope will be useful not only to the general Hindu public but also to the persons wishing to avail themselves of the help that this book can contribute to their study in the *Advaita Saiva Philosophy of Kashmir.*

With these few prefatory remarks I leave the work to the indulgent judgment of the reader.

*Dated Srinagar,*<br>*the 7th Dec.* 1920 — MADHUSUDAN KAUL

अथ

# श्रीमालिनीविजयवार्तिकम्

## श्रीमदाचार्याभिनवगुप्तपादविरचितम् ।

### प्रथमः काण्डः

विमलकलाश्रयाभिनवसृष्टिमहा जननी
भरिततनुश्च पञ्चमुखगुप्तरुचिर्जनकः ।
तदुभययामलस्फुरितभावविसर्गमयं
हृदयमनुत्तरामृतकुलं मम संस्फुरतात् ॥ १ ॥

यदीयबोधकिरणैरुल्लसद्भिः समन्ततः ।
विकासिहृदयाम्भोजा वयं स जयताद्गुरुः ॥ २ ॥
साभिमर्शषडर्धार्थपञ्चस्रोतःसमुज्ज्वलान् ।
यः प्रादान्मह्यमर्थौघान्दौर्गत्यदलनव्रतान् ॥ ३ ॥
श्रीमत्सुमतिसंशुद्धसद्भक्तजनदक्षिणः ।
शंभुनाथः प्रसन्नो मे भूयाद्वाक्पुष्पतोषितः ॥ ४ ॥
गुरुभ्योऽपि गरीयांसं युक्तं श्रीचुखलाभिधम् ।
वन्दे यत्कृतसंस्कारः स्थितोऽस्मि गलितग्रहः ॥ ५ ॥
ततो गुरुतरः श्रीमान्भूतिराजो महामतिः ।
जयताद्भक्तजनतासमुद्धरणसाहसः ॥ ६ ॥
श्रीसोमानन्दसंबोधश्रीमदुत्पलनिःसृताः ।
जयन्ति संविदामोदसंदर्भा दिक्प्रसर्पिणः ॥ ७ ॥

तद्दृष्टिसंस्तृतिच्छेदिप्रत्यभिज्ञोपदेशिनः ।
श्रीमल्लक्ष्मणगुप्तस्य गुरोर्विजयते वचः ॥ ८ ॥
अप्यसंख्यनवास्वादचमत्कारैकदुर्मदा ।
येनानुत्तरसंभोगतृप्ता मे मतिषट्पदी ॥ ९ ॥
तदेकमयतामाप्य स्वात्मन्येव तथा स्थिता ।
तदस्याः प्रोन्मिषन्त्येव विविधा नादसंपदः ॥ १० ॥
सच्छिष्यकर्णमन्द्राभ्यामार्थितोऽहं पुनः पुनः ।
वाक्यार्थं कथये श्रीमन्मालिन्यां यत्काचित्कचित् ॥ ११ ॥
औचित्येनेतरत्यागाद्वाच्यवाचकयोर्मिथः ।
वर्तनावर्त एतस्मिन्साधु शास्त्रं च वार्तिकम् ॥ १२ ॥
येऽहर्निशं प्रकाशन्ते सर्वस्य च न गोचरे ।
नुमोऽभिनवगुप्तांस्ताञ्शिवचन्द्रांशुसंचयान् ॥ १३ ॥

---

जयन्ति जगदानन्दविपक्षक्षपणक्षमाः ।
परमेशमुखोद्भूतज्ञानचन्द्रमरीचयः ॥ १४ ॥

---

अनियन्त्रितसद्भावाद्भावाभेदैकभागिनः ।
यत्प्राग्जातं महाज्ञानं तद्रश्मिभरभैरवम् ॥ १५ ॥
ततस्तादृक्स्वमायीयहेयोपादेयवर्जितम् ।
विततीभावनाचित्ररश्मितामात्रभेदितम् ॥ १६ ॥
अभिमर्शस्वभावं तद्धृदयं परमेशितुः ।
तत्रापि शक्त्या सततं स्वात्ममय्या महेश्वरः ॥ १७ ॥
यदा संघट्टमासाद्य समापत्तिं परां व्रजेत् ।
तदास्य परमं वक्त्रं विसर्गप्रसरास्पदम् ॥ १८ ॥





अनुत्तरविकासोद्यज्जगदानन्दसुन्दरम् ।
भाविवक्त्राविभागेन बीजं सर्वस्य यत्स्थितम् ॥ १९ ॥
हृत्स्पन्दहृक्परासारनिर्नामोर्म्यादि तन्मतम् ।
एतत्परं त्रिकं पूर्वं सर्वशक्त्यविभागवत् ॥ २० ॥
अत्र भावसमुल्लासशङ्कासंकोचविच्युतिः ।
स्वानन्दलीनतामात्रमात्रिच्छाकर्महृक्क्रयम् ॥ २१ ॥
तथा च गुरवः शैवदृष्टावित्थं न्यरूपयन् ।
*स यदास्ते चिदाह्लादमात्रानुभवतल्लयः ॥ २२ ॥

* शिवैक्याख्यातिरूपभ्रान्तिमयसंसारावस्था यावन्नोन्मिषति तावदपि तावत्येवोक्तरूपशिवता, तथा च शक्तिपंचकमपि तदानीमेकरूपमपि व्यवहारापेक्षया कार्यसंभवादस्त्येव, तथा हि परापरावस्थायां योऽहमिति सहजप्रत्यवमर्शात्मा प्रकाशः स एव परानपेक्षः पूर्णत्वादानन्दरूपो निर्वृतचिन्मयः स्थित एव सैव स्वतन्त्रता मुख्या शिवता, तदुक्तं चिदाह्लादेति । पूर्णचिदानन्दमात्रेऽनुभवः प्रकाशनं न तु बाह्ये, तत एव तत्रैव लयो यस्य स तथानेन निर्वृतचित्कथिता । इच्छाज्ञानक्रियास्तु भिन्नविषयाद्यपेक्षया स्फुटीभवन्ति । परावस्थायां पुनः पूर्णोऽहमित्येव स्वस्वभावः प्रकाशते तावत्प्रकाशत्वात्, तदेव ज्ञानं संरम्भरूपत्वात्सैव क्रिया तत्स्वभावत्वेन तदभ्युपगमादिच्छापि स्थितैवेत्याह तदिच्छा तावतीति तावच्च स्वरूपं क्रियेति योज्यम् । अथ वा तावज्ज्ञानमिति—तावच्छब्दः क्रियायां स्त्रीलिङ्गः परिणमनीयः, द्वितीयस्त्वन्ते तावच्छब्दः क्रमार्थः परापराद्यवस्थापेक्षः, अत एव भिन्नविषयाभावेऽप्यभ्युपगमप्रकाशसंरम्भाणां सदैव प्रकाशमयत्वेनाविचलनादिच्छादिव्यवहारयोग्यतैवेत्युक्तं सुसूक्ष्मेति सुसूक्ष्मत्वमेषितव्याद्यभावेन विभागापरिकल्पनात्, अत एव शक्तिसामरस्यं पूर्णचिन्मात्रप्रकाशतात्मत्वाच्चिदाह्लादपरत्वं चोक्तम् सैव च निर्विभागता परावस्था यदैवमास्ते परस्तदेत्युक्ता ॥ ( शि० दृ० श्लो० ४ )

१* सूक्ष्ममिति पाठः ।

तदिच्छा तावती ज्ञानं तावत्तावत्क्रिया हि सा ।
सुसूक्ष्मशक्तित्रितयसामरस्येन वर्तते ॥ २३ ॥
चिद्रूपाह्लादपरमस्तदाभिन्नो भवेदिति ।
ननु चेदृशि विश्वात्मभूते संकोचवर्जनात् ॥ २४ ॥
विकल्पकल्पनामूलाः कथं शास्त्रादिसंपदः ।
उच्यते सर्व एवायं बोधः संवित्प्रभामयः ॥ २५ ॥
प्रकाशरूपतायोगाच्चिदामर्शघनात्मकः ।
तत्रामर्शस्वभावोऽयं यः प्रकाशः प्रकाशते ॥ २६ ॥
स एव किन्न शास्त्रौघः किमन्यैर्युक्तिडम्बरैः ।
परवाग्देवताविद्धस्तत्रासौ केवलं भवेत् ॥ २७ ॥
न तु लौकिकमायीयवर्णपुञ्जविचित्रितः ।
*उक्तं श्रीप्रत्यभिज्ञायामात्मसंस्थस्य भासनम् ॥ २८ ॥
अस्त्येव न विना तस्मादिच्छामर्शः प्रवर्तते ।
स्वभावमवभासस्य विमर्शं विदुरन्यथा ॥ २९ ॥
प्रकाशोऽर्थोपरक्तोऽपि तुल्यो स्फटिकादिकैरिति † ।
किं च यत्किञ्च नामात्र चिच्चमत्कारगोचरः ॥ ३० ॥
ह्लादनामादिविषयस्तदासौ भवति स्फुटः ।
तद्विमर्शान्तरालम्बसमुच्छलनयोगतः ॥ ३१ ॥
पश्चात्सुस्फुटतामेति तथा च गुरुरूचिवान् ।

---

* अत्र वृत्तिः—चिदात्मनश्चेश्वरस्यात्मनीवाभेदेनार्थेष्वपि प्रकाशोऽस्त्य-न्यथा प्रतिभासमानार्थैकविषयो निर्मातृतामयो विमर्श इच्छारूपो न स्यात् ॥ (प्र० भि० अ० १ आ० ५ श्लो० १०)

† अत्र वृत्तिः—प्रकाशस्य मुख्य आत्मा प्रत्यवमर्शस्तं विनार्थभेदि-ताकारस्यास्य स्वच्छतामात्रं न स्वजाड्यं चमत्कृतेरभावात् ॥ (प्र० भि० अ० १ आ ५ श्लो० ११)

यथा स्वसंविदा सिद्धं सुखादि व्यवतिष्ठते ॥ ३२ ॥
न हि व्यवस्थासमये वेद्यते तत्स्वसंविदा ।
तथावश्योपगन्तव्यः स्वसंवित्साधनादिति ?॥ ३३ ॥
एवमत्रापि पश्चाद्यज्ज्ञानाद्युल्लासवर्त्मनि ।
सर्वाभेदमयी भूमिर्यावदामृश्यतां व्रजेत् ॥ ३४ ॥
तावत्तदुचितोदारविमर्शांशस्फुटत्वतः ।
तादृक्स एव शास्त्रत्वं[1] प्राग्विसर्गः प्रपद्यते ॥ ३५ ॥
एतदेव तु युक्तं स्यात्तथा ह्यनुपधौ परे ।
शास्त्रार्थेऽपि समाचारलेशः कोऽपि विभाव्यते ॥ ३६ ॥
स नूनं स्फुटताधामभाविज्ञानादिशक्तिमान् ।
उपरागात्ततस्तत्तद्वैचित्र्यपरिबृंहितः ॥ ३७ ॥
यथा मुखस्य तद्व्यक्तिस्थानेऽप्सु मुकुरे मणौ ।
खड्गे चञ्चलसद्वृत्तसूक्ष्मदीर्घादिका स्थितिः ॥ ३८ ॥
तदित्थं परमे रूपे प्रोद्भूता ज्ञानसंपदः ।
अनवच्छिन्नहृदयबीजात्मत्रयसुन्दराः ॥ ३९ ॥
यदा तूच्छलदाकारस्वतरङ्गान्तरात्मकान् ।
विसिसृक्षति भावौघान्भैरवः शक्तिबृंहितः ॥ ४० ॥
तदा ता एव विज्ञानसंपदस्तदुपाधिजाम्[2] ।
ईषत्क्रियासमाचारयन्त्रणां संश्रिता इव ॥ ४१ ॥
परितस्तत्तरङ्गौघसात्मतां[3] समुपाश्रिते ।
तथापि जगदानन्दसुन्दरे बोधभैरवे ॥ ४२ ॥
भावनिर्भरतामात्रसंतृप्ते शक्तिशालिनि ।
पूर्णया[4] निजशक्त्यैव न्यक्कृते शक्तिमत्पदे ॥ ४३ ॥

---

१ शास्त्रत्वप्रागिति पाठः । २ उपाधिजान् इति पाठः । ३ घमात्मतेति पाठः । ४ [illegible] पाठः ।

ताद्दगेव विमर्शात्मा ज्ञानधारा विजृम्भते ।
यस्यां भोगोपदेशेन कोऽपि ह्लादः प्रवर्तते ॥ ४४ ॥
यदीयसंविदाचारचर्याविस्रम्भभावितः ।
भोगव्रातोऽपि धन्यानां निःश्रेयसपदायते ॥ ४५ ॥
यत्रोच्यते स्वशक्त्यादिक्षोभसंरम्भनिर्भरा ।
देवस्य यागप्रियता विशेषान्मातृमध्यतः ॥ ४६ ॥
ऐश्वर्यशक्त्युद्रेकेण लब्धेश्वरपदाभिधः ।
देवो विज्ञानमहिमा प्रोद्भूतोऽयं प्रपञ्चितः ॥ ४७ ॥
अत्राप्यनन्तभावांशसंयोजनवियोजने ।
अग्दशाभेदसंधानादसंख्यत्वमुपाश्रिते ॥ ४८ ॥
तदुपाधिवशादेव संविज्ज्ञानपदोज्झिता[1] ।
तायन्ते विविधाः शास्त्रक्रियाज्ञानविभूतयः ॥ ४९ ॥
मुख्यस्त्वेष प्रपञ्चोऽयं पञ्चात्मत्वेन चर्चितः ।
तथा च वक्ष्यते * **तत्त्वमभिन्नमपि पञ्चधा** ॥ ५० ॥
**सव्यापाराधिपत्वेन तद्धीनप्रेरकत्वतः ।**
**इच्छानिवृत्तेः स्वच्छत्वादित्याद्यैर्वाक्यसंचयैः** ॥ ५१ ॥
नन्वेतावति सन्दर्भे देशकालकलाकृताः ।

* शिवस्य सव्यापारत्वेन क्रियाशक्तिप्रधाना जागरा, आधिपत्वेन स्व-स्वातन्त्र्यादसाधारणतत्तत्सृष्टिमयो ज्ञानशक्तिप्रधानः स्वप्नः, ज्ञानाक्रियाभ्यां हीनेनौदासीन्यप्रख्यावात्मना प्रेरकत्वेनेच्छाप्रधानं सौषुप्तम्, एषणायिपूर्णतया तन्निवृत्त्याप्यानन्दशक्तिप्रधानं तुर्यम्, निरानन्दतया सर्वसर्वात्मकपरिपूर्णस्वस्वरूपविश्रान्तेः चिच्छक्तिप्रधानं तुर्यातीतमिति पञ्चावस्थात्मकमित्यर्थः ॥

[1] पदोज्झित इति पाठः ।

भेदा न संभवन्त्येव बाढमोमिति वच्महे ॥ ५२ ॥
न ह्यत्र कालतत्त्वस्य नाममात्रं विभाव्यते ।
वैभव्यपि महाकाली शक्तिर्नात्र विजृम्भते ॥ ५३ ॥
तर्ह्यभिन्ने स्वसंपूर्णे तदा पश्चात्पुनर्यदा ।
परतश्चेति[1] को न्वेष वाचोयुक्तिपरिग्रहः ॥ ५४ ॥
अत्र ब्रूमः सत्यमेव वस्तुतस्तु स्फुटात्मनि ।
जृम्भिते तत्त्वसर्गेऽपि कालेऽप्युन्मिषितात्मनि[2] ॥ ५५ ॥
बोधस्य नैव सन्त्येताः पूर्वापरविकल्पनाः ।
कालो विशेषणत्वेन यस्माद्भवति भेदकः ॥ ५६ ॥
विशेषणं च तत्प्रोक्तं समशीर्षिकयैव यत् ।
भेदेन वेद्यतामेति यथा नीलं सरोरुहम् ॥ ५७ ॥
न च बोधस्य वेद्यत्वं कदाचिदुपपद्यते ।
वेद्यत्वं भासमानत्वं तत्प्रकाशप्रसादतः ॥ ५८ ॥
प्रकाशः स सबोधश्च स चेद्बोधान्तरस्थितेः ।
प्रकाशानियमान्नूनमनवस्था[3] प्रवर्तते ॥ ५९ ॥
अत एव विमूढा ये बोधमप्रथमानकम् ।
अर्थप्रथात्मकं ब्रूयुः स्ववचोवञ्चितास्तु ते ॥ ६० ॥
तस्मात्कालो न बोधस्य भेदकत्वाय कल्पते ।
नापि वेद्यस्य कालोऽसौ भेदकीभवितुं क्षमः ॥ ६१ ॥
विश्वं हि बोधाभिन्नं तदतथात्वे न भासते ।
प्रकाशेन समाविष्टश्चित्रं भावः प्रकाशते ॥ ६२ ॥

---

१ परतश्चैतिकोन्मेष इति पाठः। २ कालोऽपीति पाठः।

३ शानियमादिति पाठः।

विश्वप्रकाश एवं स्यात्सर्वस्यैव सदातनः ।
सति प्रकाशे बोधाख्ये स प्रकाशत्वमश्नुते ॥ ६३ ॥
अप्रकाशोऽपि भावश्चेत्प्रकाशात्मा स वेद्यते ।
अप्रकाशस्त्वसौ भाव इत्यत्र शरणं तमः ॥ ६४ ॥
यश्चाप्रकाशो भावात्मा प्रकाशात्मा स चेत्कृतः ।
नूनं स भावो नष्टः स्यात्स्वा[1]प्रकाशत्वविच्युतेः ॥ ६५ ॥
नातद्रूपं प्रकाशं च कर्तुं विधिरपि क्षमः ।
ननु तावदिदंभावः प्रकाशे सति भासते ॥ ६६ ॥
अस्त्वेतदेव किंत्वित्थमप्रकाशः प्रकाशताम् ।
भावस्य चाप्रकाशत्वे प्रकाशीभाविते सति ॥ ६७ ॥
नैवं प्रकाशितो भाव इति वस्तुस्थितिर्भवेत् ।
तदलं व्यतिरिक्तेन प्रकाशेन शिवस्तथा ॥ ६८ ॥
तस्मात्प्रकाश एवासौ गीतो यः परमः शिवः ।
स एवाचिन्त्यमहिमा स्वातन्त्र्योद्दामघूर्णितः ॥ ६९ ॥
प्रकाशते तथा तैस्तैः स्वभावैरच्युतस्थितिः ।
नात्र सर्वत्र सर्वज्ञभावः कश्चन शङ्क्यते ॥ ७० ॥
अहं चैत्रो घटं वेद्मि न पटं वेद तं द्वयम् ।
नायं वेत्ति पटः सोऽहं जाने घटपटाविति ॥ ७१ ॥
वेदिष्यामि न वा पूर्वमजानन्नैव वा क्वचित् ।
क्रमेण वेद्मि युगपद्द्वाभ्यामुभयवर्जितम् ॥ ७२ ॥
सर्वं वेद्मि न किंचिच्च जाने नैवास्मि कश्चन ।
भावात्मा ननु नैवाहमहं सर्वं च सर्वदा ॥ ७३ ॥
सर्वमस्म्यहमेवैकः किं सर्वमितरद्भवेत् ।

१ स्वप्रकाशेति पाठः ।

इत्यादिरेक एवायं प्रकाशः प्रविजृम्भते ॥ ७४ ॥
नन्वेको यद्यसः कश्चित्प्रकाशो न तदा परः ।
कथं भवेदहो मूढः कथं व्युत्पाद्यतामयम् ॥ ७५ ॥
एकः प्रकाशः स्वातन्त्र्याच्चित्ररूपः प्रकाशते ।
वस्तुतश्च न चित्रोऽसौ नाचित्रो भेददूषणात् ॥ ७६ ॥
घटप्रकाशे वस्त्रस्य प्रकाशो यदि संभवेत् ।
नासौ घटप्रकाशः स्याद्द्विप्रकाशो ह्यसौ भवेत् ॥ ७७ ॥
सोऽपि चास्त्येव नो नास्ति तदिदं त्वत्प्रचोदितम् ।
घटात्मना प्रकाशोऽस्य माभूदित्यवतिष्ठते ॥ ७८ ॥
तच्चायुक्तं प्रकाशस्य बोधत्वात्स्वात्मजृम्भणम् ।
लक्षणं यदि तत्कोऽयं वृथा वाग्जालडम्बरः ॥ ७९ ॥
परिच्छिन्नप्रकाशत्वं जडस्य किल लक्षणम् ।
जडाद्विलक्षणो बोधो यतो न परिमीयते ॥ ८० ॥
तस्मादर्कस्य सद्भावे सिद्धे कः खलु वालिशः ।
ब्रूयात्कथमयं स्वांशुशुभ्रिताशेषभूरिति ॥ ८१ ॥
तस्मात्सिद्धे प्रकाशेऽस्मिन्याः प्रकाशविकल्पनाः ।
तस्मात्ताः सर्वसंभुक्तयोषिच्चारित्रपालनाः ॥ ८२ ॥
असिद्धौ च प्रकाशस्य कोऽहं किं त्वं तमोऽपि किम् ।
न किंचिदपि वा किं स्यात्तूष्णीं स्यादपि वा कथम् ॥ ८३ ॥
तस्मात्प्रकाशतादात्म्यलब्धभैरवभागिनाम् ।
भावानामपि कालोऽयं न किंचित्कर्तुमर्हति ॥ ८४ ॥
हन्त तर्हि कथंकारं तदेत्यादिवचःक्रमः ।
श्रूयतामुक्तमप्येतत्पुनर्निर्भज्य भण्यते ॥ ८५ ॥
यः प्रकाशः स एवायं प्रतिभाति तथा तथा ।

नैव चान्यस्य कस्यापि स तु भात्येव केवलम् ॥ ८९ ॥
स एव परमोदारः सर्वस्यैवावभासकः ।
स्वतन्त्र इति तस्येच्छा शक्तिः[1] स्वातन्त्र्यसंज्ञिता ॥ ८७ ॥
स च स्वात्मनि विश्रान्तस्तदन्याभावयोगतः ।
स्वात्मविश्रान्तिरेवैषा देवस्यानन्द उच्यते ॥ ८८ ॥
स्वातन्त्र्यमहिमा वास्य स्वरूपादपृथक्स्थितिः ।
स्वप्रकाशे निजे धाम्नि भासयेद्भावविभ्रमान् ॥ ८९ ॥
भासना च क्रियाशक्तिरिति शास्त्रेषु कथ्यते ।
यया विचित्रतत्त्वादिकलना प्रविभज्यते ॥ ९० ॥
भासनानवभाते च कथं नाम प्रकल्पते ।
तदस्यान्तःस्थितं भानं ज्ञानशक्तिरहं स्मृता ॥ ९१ ॥
एतावदस्य देवस्य यद्रूपं स्वात्ममात्रतः ।
स उन्मेष इति प्रोक्तः पञ्चशक्तिस्ततो विभुः ॥ ९२ ॥
त्रिशक्तिरेकशक्तिर्वा देवो वा केवलः स्थितः ।
शक्तिरेवाथ देवी सा सा च शास्त्रे निरूप्यते ॥ ९३ ॥
वक्ष्यते च जगद्धातुः कथितेत्यादितः परम् ।
सैका सत्यनेकत्वं वै गच्छतीति महेशिना ॥ ९४ ॥
स चायं निर्भरानन्दविश्रान्तिस्वात्मसुस्थितः ।
सोदर्यैः शब्दसंदर्भैर्भाष्यते भैरवादिभिः ॥ ९५ ॥
सविधं दूरगं क्वापि यद्यप्यस्य न वस्तुतः ।
शब्दजातं भवेत्किंचिदन्यदप्यथ वा प्रभोः ॥ ९६ ॥
तथा च भासयत्येव देव एष तथा तथा ।

---

१ शक्तिस्वातन्त्र्येति पाठः ।

ततस्तदनुसारेण सर्वोऽयं कल्पनाक्रमः ॥ ९७ ॥
न च तत्कल्पनामात्रं तथात्वेऽप्यथ का क्षितिः ।
तथा संकल्पतां देवो यद्वा कल्पयतां तथा ॥ ९८ ॥
एवं चैष प्रकाशात्मा सप्तत्रिंशात्मकात्परः ।
वैचित्र्यभासनां कुर्वन्कालं भासयति प्रभुः ॥ ९९ ॥
वैचित्र्यभासनैवेयं कालशक्तिरुदाहृता ।
ततोऽवभासमानैतत्कालशक्त्यनुरोधतः ॥ १०० ॥
आस्मकीनात्तदेत्यादिरूपरागः प्रवर्तते ।
न चासौ तत्र नास्त्येव तत्र यन्नास्ति तत्कुतः ॥ १०१ ॥
अन्यत्र तन्यतां नाम तत्प्रकाशवशं हितम् ।
नन्वेवमपरे तत्त्वजाले शुद्धेतरस्थितौ ॥ १०२ ॥
शुद्धाशुद्धपदे वापि विद्यादौ तत्त्वमण्डले ।
शुद्धभैरवसद्भावादविशेषो भविष्यति ॥ १०३ ॥
नरीनृत्यामहे हन्त यत्नाद्व्याख्येयमेव नः ।
आयुष्मतो यद्धृदये स्वयं विपरिवर्तते ॥ १०४ ॥
शुद्धाशुद्धविभेदो हि परमार्थकथासु नो ।
स तु तत्कृत एवास्ते मूढानां धियि निश्चलः ॥ १०५ ॥
ननु शुद्धेतरत्वाख्यो यदि भेदो न वास्तवः ।
व्याचिकीर्षितमेवैतच्छास्त्रं विवदते ततः ॥ १०६ ॥
अशुद्धत्वं हि तत्त्वानां दीक्षया शोधनं ततः ।
इत्यादि बहुधा भेदप्रधानात्र यतः स्थितिः ॥ १०७ ॥
उच्यते नाद्वयेऽमुष्मिन्द्वैतं नास्त्येव सर्वथा ।
उक्तं हि भेदवन्ध्येऽपि विभौ भेदावभासनम् ॥ १०८ ॥

---

१ देवयद्वेति पाठः ।

तदेव खलु संसारो मायाविद्यादिभिः पदैः ।
बन्ध इत्युच्यते तत्र रूढाः संसारिणो मताः ॥ १०९ ॥
तच्चिन्तानुसृतेरेषां शुद्धाशुद्धादिनिश्चयः ।
किं च शास्त्रमिदं सम्यग्भगवद्योगदेशकम् ॥ ११० ॥
भगवद्योगमद्वैतं निर्द्वन्द्वं च प्रचक्षते ।
तस्योपदेश इत्थं स्याद्यदि यावद्विभेदवत् ॥ १११ ॥
संभाव्यते तन्निर्भक्त्या निर्भज्यैव निरूप्यते ।
अद्वैतभैरवविभौ यत्प्रवेशोपवेशयोः ॥ ११२ ॥
आभ्यासिकी स्थितिर्नास्ति तौ हि भेदैकजीवितौ ।
अतः संभाव्यनिखिलद्वैतशङ्काव्यपोहने ॥ ११३ ॥
गुरूणां च शिशूनां च यतः सर्वैर्विजृम्भते ।
अतो द्वैतमिहाशङ्क्याशङ्क्य सर्वं प्रतन्यते ॥ ११४ ॥
तद्यावद्भाति संभाव्य न तु तत्राप्युदास्यते ।
तथा हि यदि नामृष्टं द्वैतं तर्ह्येकमेव सत् ॥ ११५ ॥
चिद्ब्रह्म तदलं तत्त्वसंख्याकल्पननिर्णयैः ।
पञ्चविंशतिता कस्मात्तत्त्वानां तन्निरूप्यते ॥ ११६ ॥
तस्माद्द्वैतस्य भेदात्मास्थितेर्यावद्भातिग्रहम् ।
कृत्वा यस्तत्प्रतिक्षेपस्तेन निःशङ्कता भवेत् ॥ ११७ ॥
एतदेव च विज्ञाने निर्भिद्यैवोपदेशनम् ।
यथासंभवितद्वज्रपञ्जराणां यद्विदारणम् ॥ ११८ ॥
तथा हि श्रीमता स्तोत्रे भट्टनारायणेन तत् ।
'नमस्ते भवसंभ्रान्तभ्रान्तिमुद्भाव्य भिन्दते ॥ ११९ ॥

---

१ गन्ध इति पाठः ।

ज्ञानानन्दं च निर्द्वन्द्वं देव वृत्वा विवृण्वते ।'*
निर्द्वन्द्वमिति निर्द्वैतं प्रकटीक्रियते पदम् ॥ १२० ॥
उद्भाव्यन्ते भ्रमाश्चेति चकारोऽत्राद्भुतावहः ।
इह चाद्वैतमेवेति पुरतः प्रतनिष्यते ॥ १२१ ॥
अध्वशुद्ध्यादिकं द्वैतेऽनुपपत्तीति वक्ष्यते ।
अभेदेन विना नैतन्ननु भेदं विनापि किम् ॥ १२२ ॥
सत्यं किंतु द्वये तत्त्वे भेदोऽपि न न युज्यते ।
इदं हि तत्पराद्वैतं भेदत्यागग्रहौ न यत् ॥ १२३ ॥
भेदे तु विश्वभावानां स्वस्वभावव्यवस्थितेः ।
अभेद इति शब्दोऽयं मन्ये भेदयते रसान् ॥ १२४ ॥

तदलं प्रकृतं निरूप्यते
परमेशः किल भेदकल्पनाम् ।
प्रकटीकुरुते यथा तथा
ननु कालोऽपि विजृम्भते तथा ॥ १२५ ॥
न तथापि च याति भिन्नतां
परमार्थेन कदाचिदेव सः ।
युगपत्स हि संविदात्मकः

---

* हे देव स्वतन्त्रचेष्टित, भवे संसारे ये संभ्रान्ताः त्वन्मायाशक्तिवशात् व्यामूढाः, तत एव च भेदासक्तत्वात्कर्मनिष्ठास्तेषां पूर्वकक्ष्यायां तां तां भेदभ्रान्तिमुद्भाव्य सिद्धान्तकक्ष्यायां भिन्दते ध्वंसकाय, तथा ज्ञानानन्दं परमाद्वयरूपं विज्ञानमानन्दमयं वृत्वा प्रथमं रहस्यत्वात् अयोग्यान्प्रति आच्छाद्य, पश्चात् योग्यान्प्रति विवृण्वते स्फुटीकुर्वते, तुभ्यं नमः । एवं च यत्पूर्वपक्षतया कर्मकाण्डस्वरूपं भगवता हेयत्वेन दर्शितं, तदेव मूढैरुपादेयत्वेन अभ्युपगम्य, ज्ञानकाण्डस्यार्थवादत्वमुच्यते । अथवा भगवतैव सृष्ट्यादिकृत्यचतुष्टयरक्षायै ते तादृशाश्वासवन्तो व्यामोहिताः स्थापिताः ॥ ( स्त० चि० ७१ श्लो० ॥ )

स्वातन्त्र्याद्बहुधा प्रकाशते ॥ १२६ ॥

क्रमकालविवर्जनाशयं
युगपच्छब्दमिमं प्रयुञ्जते ।
नन्वित्थमेकघनभावविमर्शसारे
संवेदने यदहमेष करोमि चित्रः ।
जानामि वा तदपरेऽपि न मैत्रचैत्र-
प्राया विदध्युरथवापि कथं न विद्युः ॥ १२७ ॥

अहो मायाग्रन्थिर्निबिडतम एषोऽत्र भवता-
मिदं हि प्रब्रूमः स्वपरमिह नास्त्येकमभिदम् ।
अहं वेद्मीत्येषा घटतनुविशेषप्रकटता
प्रथाश्चित्राकाराः परमहसि भान्तीति कथितम् ॥ १२८ ॥

तस्माद्घटं वेद्म्यहमित्यमुत्र
भेदो न कश्चिन्ननु मे घटोऽयम् ।
भातीति भेदप्रतिभानमस्ति
नैतन्न तस्यैष शिवस्तथायम् ॥ १२९ ॥

अत एव द्वैपायनमुख्यास्तेषु स्वशास्त्रदेशेषु ।
ममकारमेव मृत्युं खण्डनदायित्वतः प्राहुः ॥ १३० ॥

तदेवं कालकलनोपाधिजातोपरागजाः ।
तदेत्यादि प्रतायन्ते परतत्त्वेऽपि संविदः ॥ १३१ ॥

तत्र पूर्णैकरूपत्वात्सर्वं सर्वत्र चापि तत् ।
अन्यथा खण्डनायोगान्न पूर्णा पूर्णता भवेत् ॥ १३२ ॥

ततः पूर्णतया सर्वसह¹भैरवधामनि ।
पञ्चात्मकोऽयं शास्त्रार्थः शांभवः शक्त्यणुस्थितिम् ॥ १३३ ॥

---

१ महाभैरवेति पाठः ।

न्यक्कृत्यैषा परा देवी स्वात्मन्युद्रेच्य वर्तते ।
इत्थं स विसिसृक्षुः सन् भावान्विस्रष्टृतापदात् ॥ १३४ ॥
पूर्वमुच्छलितानन्दघनामभजत स्थितिम् ।
विस्रष्टृतापदे त्वेष विसर्गावेशभागपि ॥ १३५ ॥
रिक्तीभविष्यन्नानन्दघनया पूर्णया चिता ।
तावदानन्दशक्त्यंशाविसर्गावेशनिर्भरः ॥ १३६ ॥
वर्तमानस्वशक्त्योघपूर्णश्चाभूद्भविष्यति ।
रिक्तशक्तिरिति त्र्यात्मचित्रसंवेदनात्मकः ॥ १३७ ॥
तदासौ देवदेवः स्याद्विस्रष्टरि पदे स्फुटम् ।
ननु किं वर्तमानांशे संस्तो भूतभविष्यती ॥ १३८ ॥
किं नाम भवता ज्ञातं ते स्वतन्त्रेऽपि केचन ।
वर्तमानावधेर्भूतं भविष्यच्च विभज्यते ॥ १३९ ॥
यच्च यत्र न विश्रान्तं तद्विभज्येत वै कुतः ।
कथं चावधिभावः स्याद्वर्तमानस्य ते प्रति ॥ १४० ॥
तयोरवधिमत्त्वं वा तत्प्रत्यपि कथं भवेत् ।
विश्वस्य विश्वमवधिस्तद्वद्वा जायते न किम् ॥ १४१ ॥
तस्माद्भूतं भविष्यच्च वर्तमानाख्यसंविदि ।
रूढमेवेति तत्रैव यदि विश्रान्तिमावहेत् ॥ १४२ ॥
यदि चात्रैव निखिलकल्पनारश्मिमण्डलम् ।
अविस्फार्य क्षणं तिष्ठेत् संनिरुद्धनिजास्थितिः ॥ १४३ ॥
तन्निजामृतविस्फारचमत्कारैकचर्वणाम् ।
लभते परमानन्दसुधासन्दोहवाहिनीम् ॥ १४४ ॥
तथा हि सूर्यरश्म्योघपूर्णः स्याच्चन्द्रमा यदा ।
तदा सूर्यकरान्भूयो यावन्न विसिसृक्षति ॥ १४५ ॥

तावत्स्वमण्डलाभोगे क्षणं विश्रान्तिसुस्थितः ।
अन्तःस्थविश्वदेवांशतर्पणापात्रमुच्यते ॥ १४६ ॥
एवं भावप्रकाशार्कमरीचिनिचयाश्चिते ।
स्वबोधचन्द्रमहसि वर्तमाने हृदन्तरे ॥ १४७ ॥
विश्रान्तोऽन्तःस्थितोदारचित्सुधासारसुन्दरे ।
अन्तःस्थस्वामृतापूरो वम्यते न बहिर्यतः ॥ १४८ ॥
तत एवान्तरेवासौ घूर्णमानः समुच्छलन् ।
स्वान्तःस्थदेवताचक्रतर्पणाहंविदात्मकः ॥ १४९ ॥
जायते यावदुद्दाम्येत्तावत्स्वकरणक्रमः ।
निरुद्धे रश्मिपटले विभवाभावयोगतः ॥ १५० ॥
न भूतं न भविष्यच्च वर्तमानाद्विभज्यते ।
अविभागस्तयोर्यावत्तावत्का वर्तमानता ॥ १५१ ॥
भूतभाविस्वभावाभ्यां सा हि याति विभागिताम् ।
तदस्मिन्संविदंवधौ विश्रम्य त्रुटिमात्रकम् ॥ १५२
कालग्रासपरो योगी जायते खेचरः क्षणात् ।
उक्तं हि भावाभासो यः कालः स कलनात्मकः ॥ १५३ ॥
स्वसंविद्रश्मिसंस्फारो भावाभावः स नापरः ।
तस्मात्स्वरश्मिसंरोधद्वाररुद्धाध्वमण्डलः ॥ १५४ ॥
कालग्रासैकरसिको जायते खेचरः स्वयम् ।
तदुक्तं परमेशेन तन्त्रे श्रीडामराभिधे ॥ १५५ ॥
निरुध्य रश्मिचक्रं स्वं पीत्वामृतमनुत्तमम् ।
कालोभयापरिच्छिन्ने वर्तमाने सुखी भवेत् ॥ १५६ ॥
रोधोऽपि नाम नैतस्मिन्संकोचपरिवर्जिते ।

---

१ सविदवधौ इति पाठः ।

तदभावान्न विस्फारो ग्रासतृप्ती तथात्र के॥ १५७ ॥
किं तूक्तनीत्या संरोधस्फारग्रासादि भासते।
न तथाभासनाच्चान्यवस्तु विश्वत्र किंचन॥ १५८ ॥
इत्यलं खेचरीचक्रगोष्ठ्यालापेन भूयसा।
को वाभिनवगुप्तेऽस्मिन्योगः संवेदनक्रमे ॥ १५९ ॥
प्रकृतं ब्रूमहे देवीविसृष्टाश्चित्रसंविदः।
यावत्तावत्तदूर्ध्वोर्ध्वं स्रोतो यद्भेदवर्जितम्॥ १६० ॥
सौरभर्गशिखादीनि ततः शास्त्राणि तेनिरे।
उक्तं भर्गशिखायां च देवेन परमेष्ठिना ॥ १६१ ॥
ऊर्ध्वस्रोतोद्भवं ज्ञानमिदं तत्परमं प्रिये।
परमध्वनिनोर्ध्वोर्ध्वं संविद्रूपाभिधायिना ॥ १६२ ॥
ईशानवक्त्रनिर्यातात्सिद्धान्ताद्भेदमादिशत्।
अत्रापि पूर्वभेदांशव्यामिश्रीभावचित्रिताः ॥ १६३ ॥
विज्ञानसंपदस्तांस्तांस्तन्वते शास्त्रविभ्रमान्।
इह यावत्तु मुख्येयं षडात्मा शास्त्रसन्ततिः॥ १६४ ॥
एतत्पूर्वार्धभागीनि त्रिकशास्त्राणि यानि तु।
षडर्धसंज्ञया तानि गुरुभिर्भाषितान्यलम्॥ १६५ ॥
न तु गूढरहस्यत्वादेवैष वचनक्रमः।
एवं हि द्वादशार्धार्धमित्याद्यपि न किं भवेत् ॥ १६६
अत्र शक्तित्रयं मुख्यं संपूर्णस्थिति कल्पते।
अनन्योन्योपरोधेन पूर्णं पूर्णचिदात्मकम्॥ १६७ ॥
ततः परं तु त्रितयं कस्यांचिद्गुणताजुषि।
अन्यस्यां गुणताभाजि यामलं परिभाष्यते ॥ १६८ ॥
पश्चाद्विसृष्टेऽर्थौघे तद्वैचित्र्योपाधियोगतः।

पृथग्भावावियोगासु स्वात्मशक्तिषु पञ्चसु ॥ १६९ ॥
चित्स्पन्देच्छाविदाकर्मरूपासु स्वौचितीवशात् ।
पञ्चब्रह्माङ्गसुभगात्स्फुरद्भावांशबोधजम् ॥ १७० ॥
रूपं शास्त्रात्मतां प्राप्तं पञ्चधैव विजृम्भते ।
तथा हि प्रागनन्तान्तास्थितभावौघजृम्भणम् ॥ १७१ ॥
यावत्करोति भगवांस्तावदीशमुखस्थितिः ।
अन्तःस्थाया अभिन्नायाः क्रियाशक्तेर्विजृम्भणे ॥१७२॥
क्रमादुन्मिषिते तावानेष स्फारः प्रतायते ।
क्रियाशक्तेः स्फुटः स्फारः मायात्वं प्रतिपद्यते[1] ॥ १७३ ॥
मायातत्त्वस्वरूपे हि शिवेशानीति वक्ष्यते ।
शुद्धाशुद्धेतराशुद्धविश्वनिर्माणकारिणः ॥ १७४ ॥
पञ्चमन्त्रतनोः शंभोर्निर्मेयाशुद्धसंगतिः ।
अस्त्येव पूर्वकोट्यां हि सर्वमेव व्यवस्थितम् ॥ १७५ ॥
तथाहि स्वगृहात्क्वापि यियासोः प्रथमक्षणे ।
यावत्किंचन कर्तव्यं यच्च तन्मध्यवृत्ति तु ॥ १७६ ॥
तुटिपातेऽपि सर्वज्ञसर्वकर्तृत्वलब्धृता ।
तत एव विशेषांशनिष्कम्पकुशलात्मनाम् ॥ १७७ ॥
तथा हि जात्यखड्गाग्रधारासंस्पर्शसंमिता ।
स्फुरत्त्वसमकालं धीर्विशेषांशान्प्रकर्षति ॥ १७८ ॥
रत्नतत्त्वस्फुटप्रज्ञो विद्युत्तत्कालदर्शितान् ।
तांस्तान्विशेषांश्चिनुते रत्नानां भूयसामपि ॥ १७९ ॥
अनेकस्वरसंभारस्पर्शलाघवयोजिते ।
वीणायामेकविस्तारे वैचित्र्यं वेत्ति तन्मयः ॥ १८० ॥

---

[1] प्रतिपत्स्यते इति पाठः ।

निविडाभ्यासधाराग्रविश्रान्तश्रवणेन्द्रियः ।
वेत्त्येव तत्स्वरांशानाः श्रुत्यूनाधिकतामपि ॥ १८१ ॥
आस्तामभेदवादेऽस्मिन्न यत्नेनैव सिद्ध्यति ।
एतद्यत्र विभातेऽपि भेदे वास्तवमद्वयम् ॥ १८२ ॥
भेदैकजीविते शास्त्रे यावदेतत्स्थितं स्फुटम् ।
तथा हि पतञ्जलिना पादे वैभूतनामनि ॥ १८३ ॥
न्यरूप्यत प्रातिभाद्वा सर्वमत्र मयापि च ।
प्रातिभे प्रथमोन्मेषे संविद्रूपिण्यखण्डिते ॥ १८४ ॥
स्थितः सर्वस्फुरत्तात्मा[1] सर्वसिद्धिफलोदयः ।
एवं जगति निर्मेये निर्भित्सास्त्रीकृतं बलात् ॥ १८५ ॥
अशुद्धमपि तद्रूपनानावैचित्र्ययोग्यपि ।
सामान्याकाररूपेण दलं भेदात्मसुन्दरम् ॥ १८६ ॥
आस्ते प्रोन्मिषितं सैषा भेदाभेदात्मिका स्थितिः ।
अत एव हि सादाख्ये ज्ञानशक्तिस्वरूपिणि ॥ १८७ ॥
अशुद्धलेशकालुष्यात्परापरतया स्थितिः ।
तेनेशशुक्तादेतस्मादप्यूर्ध्वपदभागिनः ॥ १८८ ॥
मायाप्रकटनौत्सुक्यात्तत्संस्कारजुषस्तथा ।
बहुक्रियासमारम्भमयं विविधमन्त्रणम् ॥ १८९ ॥
प्रादुर्भूतमहाज्ञानसन्ततेश्च शिवप्रदम् ।
स हि तत्रापरो[2] भावः परभावनिमीलितः[3] ॥ १९० ॥
न तु रूढिमुपागच्छेदशुद्धाध्वविधाविव ।
तेन वैष्णवबौद्धादिशासनान्तरनिष्ठिताः ॥ १९१ ॥

---

१ स्फुरतात्मेति पाठः । २ स हि तत्रापर इति पाठः ।
३ तथा निमीलन इति पाठः ।

यथा सम्यङ्ग मुच्यन्ते न तथा शैवसंस्कृताः ।
अतिमार्गक्रमकुलत्रिकस्रोतोन्तरादिषु ॥ १६२ ॥
परमेशानशास्त्रे तु ये सम्यग्दीक्षिता नराः ।
तेषां नैवापवर्गस्य लाभे भेदोऽस्ति कश्चन ॥ १६३ ॥
न चैतदतिरिक्तोऽपि मोक्षोपायोऽस्ति कश्चन ।
केवलं क्वाप्यनायासा जीवन्मुक्तिक्रमेण च ॥ १६४ ॥
शीघ्रमेव परा सिद्धिर्यथास्मद्दर्शनेष्विति ।
क्वापि तत्त्वावलीयोगपरिपाटीक्रमाच्चिरात् ॥ १६५ ॥
तैस्तैः क्रियाकलापैश्च लभ्यते परमं फलम् ।
अत एवास्ति संहारदृशां कौलिक्यपीह दृक् ॥ १६६ ॥
यथोक्तं कालपादादौ दीक्षयेच्छ्रपचानिति ।
चिदुन्मेषादिकाः पञ्च याः पूर्वं प्रागभेदतः ॥ १६७ ॥
प्रोक्ताः परस्मिंश्चिन्नाथे भैरवे समवायतः ।
ता एव भावोपाध्यंशलब्धभेदविभाविताः ॥ १६८ ॥
भेदांशमेव पुष्णन्ति प्रागभेदजुषोऽप्यलम् ।
तथा ह्योदनसंभोगो यो देहस्योपचायकः ॥ १६९ ॥
कफसंचयपातेन स देहस्यापचायकः ।
ननु देवस्य विश्वात्मभेदेऽपि स्वापरिच्युतेः ॥ २०० ॥
विकारिष्वेव योग्यानामुपाधीनां गतिः कुतः ।
तदुपाधिवशाद्भेदो भैरवे भावसंभवात् ॥ २०१ ॥
इति नास्मन्मनोभूमामुपारोढुमिहार्हति ।
तूष्णीं विकारिणो भावाः सन्तीति ह्यतिसाहसम् ॥ २०२ ॥
देवः स एव विश्वात्मा तथारूपेण भासते
अनुपाधेरभिन्नस्य भिन्नं नोपाधिभासनम् ॥ २०३ ॥

नन्वित्थं तदसत्यं स्यात्कथं सत्यं तदेव हि ।
तथावभासनादन्यत्क किं सत्यं निरूप्यताम् ॥ २०४ ॥
नन्वेवं स्वप्नसंसारः किं सत्यं किंत्वसौ किल ।
अभीष्टार्थक्रियावन्ध्योऽसत्यो व्यवहृतः परम् ॥ २०५ ॥
एतच्चाग्रे प्रपञ्चेन युक्तियुक्तं निरूप्यते ।
तस्मादुन्मेषशक्तिर्या पूर्वमासीदभेदिनी ॥ २०६ ॥
भावोन्मेषस्वरूपासौ याता तत्पुरुषस्थितिम् ।
यदभिन्नं तदग्राह्यं यच्चाग्राहकमीश्वरम् ॥ २०७ ॥
अधुना तत्स्थितं ग्राह्यं भेदात्तद्ग्राहकं भिदः ।
पुरुषाख्यं ततः[1] प्रोक्तं सृष्टेः प्रारम्भयोगतः ॥ २०८ ॥
सुस्फुटप्रत्यभिज्ञानान्मुख्यं वक्त्रं च भण्यते ।
अत एवात्र विसरभावस्थितिविघातकम् ॥ २०९ ॥
नानारुग्ग्रहसंघातविषादि परिचर्च्यते ।
अनेकयुक्तिदलितव्याधिसंशान्तसुस्थिताः ॥ २१० ॥
अत्र सुस्फुटतां यान्ति भावा भेदैकवृत्तयः ।
भावत्वमेव यत्सर्वं तत्त्विदं[2] पूर्वजं मुखम् ॥ २११ ॥
सर्वतश्च गुणोत्कर्षादीशानस्योर्ध्ववक्त्रता[3] ।
दिक्कालकलनाशून्ये न तु दिग्भेदकल्पनाः ॥ २१२ ॥
यो हि यस्माद्गुणोत्कृष्ट इति चोर्ध्वो भविष्यति ।
ततो भावान्यदा सम्यगिच्छतीच्छाविभूतितः ॥ २१३ ॥
तदेच्छायां समारूढाः सा चेच्छा चैव निर्मला ।
येन * तन्मयतायोगात्संविदैक्यं स्पृशन्त्यमी ॥ २१४ ॥

---

१ यत इति पाठः । २ तत्त्वेदमिति पाठः । ३ वक्त्रगेति पाठः ।
* निर्मलेच्छामयतायोगात् ।

किंतूपाध्युपरक्तेच्छासंछादनतिरोहिताः ।
ते तदानीं स्थिता भावा देवस्तु स्वैषणास्थितः ॥ २१५ ॥
परां[1]चीनितसंवित्तिवक्त्रो न च परां स्थितिम् ।
पूर्णामध्युषितस्तेन सुषुप्त इव भासते ॥ २१६ ॥
असुप्तश्च प्रबुद्धत्वात्तस्य स्वापो निमीलनम् ।
नह्यस्ति परमार्थेन भैरवानन्दसंविदः ॥ २१७ ॥
तस्मिन्परप्रकाशे हि निमीलत्त्वमुपागते ।
प्रलें[2]यात्तन्निमीलत्त्वमितिर्वा कुत्र भासताम् ॥ २१८ ॥
अनाभातं च नो वस्तु व्योमसद्मगवात्तवत् ।
सोऽपि वा कल्पिताकारश्चित्प्रकाशे प्रकाशते ॥ २१९ ॥
तदमीलित एवायं निमीलन्निव तिष्ठति ।
प्रभूणामविकल्प्या हि शक्तिर्दुर्घटकारिणाम् ॥ २२० ॥
इदं सुखेन घटते दुःखेन घटते त्विदम् ।
इत्याभासनवैचित्र्ये स्वतन्त्रो हि स एव नः ॥ २२१ ॥
तदेव तस्य स्वातन्त्र्यं शक्तिः*र्नियतिनामिका ।
यया रुद्धः पशुर्जातु स्वा[3]तन्त्र्यं नैव विन्दति ॥ २२२ ॥
तदपेक्षाबलात्प्रोक्ता पत्यौ दुर्घटकारिता ।
नहि विश्वात्मनः किंचित्सुघटं वाथ दुर्घटम् ॥ २२३ ॥
किं मुहुर्मुहुरेतेन सकृन्ननु निरूपितम् ।
हन्ताविस्मृतिशीलं त्वां प्रत्येतत्स्यादपार्थकम् ॥ २२४ ॥
एकमुद्दिश्य किंत्वेतत्संरम्भो न विराजते ।
किं ह्येकाङ्कुरसंपत्त्यै प्रावृषेण्याः पयोमुचः ॥ २२५ ॥

---

१ पराचीनिति इति पाठः । २ प्रलयास्तेति पाठः ।
* नियतिर्नाम यस्याः सा । ३ स्वान्त्येषैवेति पाठः ।

मर्मस्थानमिदं चात्र व्युत्पाद्यो हि जनः स च ।
[1]व्यासक्तो हृद्भुवि कर्मौघकृष्टायां सौकुमार्यतः ॥ २२६ ॥
मायाबीजोत्थितानन्तविकल्पाङ्कुरकन्दलैः ।
भेदाभिमानजनितवाचनौचित्यसेवितैः ॥ २२७ ॥
यावद्विद्यामहादावज्वा[2]लयैषा पुनः पुनः ।
नालब्धा ताव[3]दस्यैतद्द्वैतं रोहेत्पुनः पुनः ॥ २२८ ॥
तीक्ष्णयत्नकुठारौघैः सद्वि[4]द्यावह्निदीपितैः ।
निर्भिन्नो देह[5]विटपी पुनर्नैव प्ररोहति ॥ २२९ ॥
एवं देवे सुषुप्तांशमध्यासीनाः स्थिता अपि ।
असद्देशीयतां यान्ति भावाः श्वभ्रकपित्थवत् ॥ २३० ॥
अत्र तादृशमेवं स्वं ज्ञानं वैराग्यनिर्भरम् ।
निरुपाख्यं निरालम्बं व्यजृम्भत विरागतः ॥ २३१ ॥
कपालमालाभरणाः श्मशानपदवासिनः ।
अस्मात्पराङ्मुखीभूता भूतसंघातगोचरात् । २३२ ॥

भोग्यं जुगुप्सावधि सर्वमेव
　　भोक्ता ह्यहं कः किल देह एषः ।
चर्मास्थिमात्रं न च सारमत्र
　　लेशांशभागेऽपि कदाचिदस्ति ॥ २३३ ॥

इत्थमभ्यस्यमानास्ते परां वैराग्यसंपदम् ।
प्रतिक्षणमुपारुह्य निमीलन्ति तदाहतम् (?) ॥ २३४ ॥
किमेतदिति धावन्ति दुःखेऽपीन्द्रियवृत्तयः ।
एतदेवमिति प्रायो विरज्यन्ते सुखादपि ॥ २३५ ॥

---

१ व्यासक्ता इति पाठः । २ ज्वालयेमाः इति पाठः ।
३ दास्येतद्द्वैतमिति पाठः । ४ सविद्येति पाठः ।
५ देहविटपीति पाठः ।

दृष्टानुश्रविकार्थौघवैतृष्ण्ये वशताधियः ।
तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमित्यपि ॥ २३६ ॥
नन्वकाण्डेऽपि पृच्छामः किंचिद्यदि न कुप्यते ।
किमकाण्डभेदकाण्डभेदकाण्डघटावधौ (?) ॥ २३७ ॥
तर्हि संविदियं शुद्धा स्वभावादेव चेत्कथम् ।
अशुचिभ्योऽपि भोगेभ्यो [1]रसात्स्पृहयतेतमाम् ॥ २३८ ॥
नन्वविस्मृतिशीलत्वाभिमानः क्वाधुना गतः ।
अलं वा बुद्ध्युपालब्धैरुक्तमप्येतदुच्यते ॥ २३९ ॥
स्वभावादेव संवित्तिः प्रकाशपरमार्थिका ।
विश्वावभासयोगेन भातीति हि विपश्चितम् ॥ २४० ॥
अतश्च संविदो देव्या विश्वस्मिन्भावमण्डले ।
स्वात्मन्येवोच्छलत्त्वं किं खण्डनादायि जायते ॥ २४१ ॥
यदापि परमेशानशक्त्या भेदोऽवभास्यते ।
तदापि संविद्भावेषु धावतीति त्रिविच्यते ॥ २४२ ॥
यथा लोष्टहृद्ज्वालाश्वासकुम्भवियत्स्थितिः ।
धराम्बुधिमहातेजःसमीरानन्तखात्मताम् ॥ २४३ ॥
यात्येव मिति[3]रूपेयं संवित्स्वोच्छलितक्रमात् ।
संविद्रूपसजातीयान्भावानेवानुधावति ॥ २४४ ॥
न्यरूप्यत तथा चैतत्केनापि परमेशिना ।
निम्नं तडागपानीयं कः प्रवर्तयितुं क्षमः ॥ २४५ ॥
परिपूर्णे पुनस्तस्मिन्प्रवाहाः सर्वतोमुखाः ।
ननु किं कांश्चिदेवेत्थं सैषा स्वनियतेर्बलात् ॥ २४६ ॥

---

१ न सा स्पृहयत इति पाठः । २ तथेति पाठः ।
३ मितीति पाठः ।

इत्थं धावति तत्रास्या रागतत्त्वात्मकं वपुः ।
तत्रापि च तथा रागाभास एव स धार्यताम् ॥ २४७ ॥
चिदात्मनि तु रागस्तु कोऽप्यन्यारूषणात्मकः ।
नन्वित्थं चेत्कथं नाम सा कुत्रापि विरज्यते ॥ २४८ ॥
हन्त प्रकृत एवायं वादः संगतिमागतः ।
यदा हि चितिरेवैषा सर्वथा संकुचत्स्थितिः ॥ २४९ ॥
क्रमेण भोग्योपायेभ्यो भोग्येभ्यो देहतो भुजः ।
भोगाद्भोक्तुस्तथा शून्यमहाप्रलयभागिव ॥ २५० ॥
जायते रुद्ररूपैषा दशा सांहारिकी यतः ।
सद्योजातश्च यद्रुद्रः पुरुषश्चेश्वरात्मकः ॥ २५१ ॥
श्रीमान्सदाशिवो देव ईशानश्चेति गीयते ।
विष्णुर्वामः कजोऽघोर इति चैतद्भविष्यति ॥ २५२ ॥
अन्तःस्थसर्वशक्तित्वेनैकैकस्यापि बृंहणात् ।
ब्रह्माण्येतानि कथ्यन्ते बृहत्त्वाद्विश्वबृंहणात् ॥ २५३ ॥
तदन्यशक्त्युद्रेकांशे ह्यत एव विवक्षिते ।
प्रत्येकमस्ति ब्रह्मादिहेतुपञ्चकयोगिता ॥ २५४ ॥
सैव शास्त्रेषु भेदेन तेषु तेषु प्रतन्यते ।
अतश्च सद्योजातेऽस्मिन्मुख्या रौद्रदशा स्थिता ॥ २५५ ॥
सा च संकोचरूपापि चिद्विकासे भविष्यति ।
यल्लीनौ ब्रह्मविष्ण्वंशौ तेनाधः कुरुते बलात् ॥ २५६ ॥
वस्त्वभावमयीत्यादिदशा रुद्राधिदैवता ।
भिन्नप्रमेयेति श्रीमदुत्पलेन न्यरूप्यत ॥ २५७ ॥

---

१ भोगेभ्य इति पाठः । २ भिन्नप्रमेयेत्याद्यं च नान्तं किं तु कदाचित्के ।
भ्रम इत्यादि तच्छ्रीमदिति पाठः ।

जातोऽपि भेदतन्मात्रे संकोचं यदुपागतः ।
ततो व्यतिनिमीलेते भोक्तृभोग्याविह स्फुटम् ॥ २५८ ॥
अजातमिव तद्विश्वमत्र सद्योऽवभासते ।
सद्योजातपदं तेन शून्यसंवेदनात्मकम् ॥ २५९ ॥
ततः शून्यपदस्यान्तर्यावत्स च विविक्ति ।
देवस्तावत्स्वयं बोधे विश्वं प्रोच्छलति स्थितम् ॥ २६० ॥
जानाति सेयं नाथस्य ज्ञानशक्तिर्विकासिनी ।
तयोर्विकासिचिद्वाह्नि लीनत्वमुपपादितम् ॥ २६१ ॥
संविदः शून्यरूपाया विकासो विश्वमेव तत् ।
तथा हि घनसौषुप्तविश्रान्तिवशनिर्भरः ॥ २६२ ॥
तांस्तान्गृहापणाद्यंशान्वेत्ति स्वप्नपदाभिधान् ।
अत एव न सा सृष्टिः स्थितिरेव तु सा तथा ॥ २६३ ॥
पूर्वसृष्टेषु भावेषु तद्धि विज्ञानमात्रकम् ।
तथा च जाग्रतो रूपात्स्वप्नो भेदेन जायते ॥ २६४ ॥
किंतु जाग्रत्पदादीनां प्रत्येकं बहुभेदता ।
निर्णेष्यते ततो युक्तं सृष्टिरूपेण भासनम् ॥ २६५ ॥
अतो निजविबोधेन तान्भावान्व्याप्नुवन्विभुः ।
एतैस्त्याजयते तां स्वामौदासीन्यदशां विभुः ॥ २६६ ॥
ज्ञानशक्तेरियं जृम्भा तज्ज्ञानास्थितिभाविनः ।
भावाः प्रयान्ति पूर्णत्वं विकासिनिजतेजसः ॥ २६७ ॥
परमः खलु संकोचः सद्योजातपदे भवेत् ।
यदेषां स्वस्वरूपस्य निष्ठा नैव स जायते ॥ २६८ ॥
विना संविदुपारोहं संधासंधा जडोऽजडः ।

---

१ तत इति पाठः ।

अनीलं नीलमित्यादिव्यवस्था कल्पतां कथम् ॥ २६९ ॥
यदुवाचोत्पलगुरुर्यथा सद्सतां तथा ।
जडाजडानां न स्वात्मविशेष इति निश्चितम् ॥ २७० ॥
तस्माद्बोधभरोल्लासविसृष्टस्वपरस्थितिः ।
चिदनुप्राणनां विश्वग्वमन्नानन्दसुन्दराम् ॥ २७१ ॥
चिदेकवपुषा विश्वं स्वीचिकीर्षश्चिदात्मनि ।
स्वबोधशक्तिवमनात्स देवो वाम उच्यते ॥ २७२ ॥
स्वबोधशक्त्युद्रेकेण यद्यप्येष प्रयच्छति ।
भावानां स्ववपुस्तादृक्तथापि परमार्थतः ॥ २७३ ॥
स्वीकर्तुमिच्छन्संहारमेषां कल्पयते भिदः ।
अतो भेदोव्यवस्थायां वामोऽसौ परमेश्वरः ॥ २७४ ॥
अत्र सौभाग्यनिःष्यन्दि तादृग्ज्ञानं प्रतायते ।
सौभाग्यं सोच्यते तेषां भिन्नानां स्वीक्रियैव या ॥ २७५ ॥
भावानां च विचित्राणां भोगाङ्गानां स्वशक्तितः ।
स्वकौतुककलालोकादुच्छलन्त्येव या चितिः ॥ २७६ ॥
सैव स्वभावरागेण विश्वं रञ्जयते यतः ।
व्यक्तो हि रञ्जयेद्विश्वं व्यक्तिश्चास्य स्वरूपतः ॥ २७७ ॥
यैव प्रोच्छलितावस्था स्वीकारेच्छाभरोदयः ।
तद्रश्मिसारसर्वस्वे त्वणं तिष्ठत्यनन्यधीः ॥ २७८ ॥
किं नाकर्षति किं नैष न भावयति योगवित् ॥
तत एवोच्यते शास्त्रे नारक्तो रञ्जयेदिति ॥ २७९ ॥

तथा

कामस्थं काममध्यस्थं कामाङ्कुशपुटीकृतम् ।

---

१ मसचिवि पाठः । २ भेदव्यवेति पाठः । ३ सोच्यत इति पाठः

कामेन साधयेत्तापान्कामं कामेषु योजयेत् ॥ २८० ॥
कामं स्वीकर्तुमिच्छैव तदाच्छादनयोगतः ।
विश्वं साधयते कामी कामतत्त्वमिदं यतः ॥ २८१ ॥
तथा हि परमे स्वात्मन्यध्यास्य स्थैर्यमञ्जसा ।
तदुच्छलितसंबोधकलासंछादनक्रमात् ॥ २८२ ॥
विश्वं कामाङ्कुशाधीनं किंकरत्वेन भासते ।
अध्यात्मसिद्धया युक्त्या त्वनयैव निजोदये ॥ २८३ ॥
प्राणपुर्यष्टकं देहं व्याप्य विश्वं प्रकर्षति ।
तत्त्वस्य कामतत्त्वस्य प्रकटीक्रियया यतः ॥ २८४ ॥
सिद्धचक्रेष्विदं गोप्यं किं वा न प्रकटीकृतम् ।
शून्यानन्दात्प्रसृत्यैव बोधः प्रोच्छलितात्मकः ॥ २८५ ॥
वर्तमानो निजाः शक्तीर्विकास्यैव प्रवर्तते ।
यत्रास्य प्रैविविद्यास्ति यतश्च प्रावृतद्विभुः ॥ २८६ ॥
सर्वाः शक्तीरसौ भास्तास्स्वात्मन्युद्रेच्य वर्तते ।
ततश्चिदात्मको देवो न्यग्भूत इव भासते ॥ २८७ ॥
उद्भूतास्तु विभान्त्येताः प्रोन्मेषेच्छाविदिक्रियाः
अतश्चतुष्कयुक्तोऽसौ यद्यपि प्रतिभासते ॥ २८८ ॥
तथापि शक्तिगणना वस्तुतोऽस्य भवेत्कुतः ।
अत्रैव भावभेदांशनिर्मूलनकला यतः ॥ २८९ ॥
स्थितस्ततः समाचारो लोकातिक्रान्तगोचरः ।
अनन्तशक्तिवैचित्र्यादत्राप्युच्चाटनादयः ॥ २९० ॥
संहारलीलाभूयिष्ठा अपि तास्ताः क्रियाः स्थिताः ।
तदित्थं ज्ञानशक्त्यन्ते भावानां वपुषि स्थिते ॥ २९१ ॥

क्रियाशक्तिरथान्त्यैव तान्संहरति सादरम् ।
यदा सूक्ष्मतमा शक्तिरुन्मेषाख्या पुरावधौ ॥ २९२ ॥
स्रष्टव्यभावस्थौल्येन स्थूलाकारेव भासते ।
तथैवैषा क्रियाशक्तिर्यस्यां भावा निमेषिताः ॥ २९३
स्वस्वरूपास्थितिः कापि पूर्णैव प्रविजृम्भते ।
नन्वस्त्येव क्रिया यस्यां भेदः प्रत्यवभासते ॥ २९४ ॥
सैवं सर्वा क्रिया भेदं प्रत्यु[1] प्राग्व्यपोहति ।
तथा हि भेदभूमौ ये काष्ठज्वलनतण्डुलाः ॥ २९५ ॥
त एव पाकाविष्टत्वे भेदं प्रोज्झन्ति सादरम् ।
यदि भिन्नस्वरूपास्ते पाकैक्यं तत्कथं भवेत् ॥ २९६ ॥
भिन्नं स्वरूपमङ्गानां नहि युक्त्योपपद्यते ।
ननु पाकेन कश्चित्स यत्तन्नानास्वरूपकम् ॥ २९७ ॥
ज्वलनक्लेददाहादि तत्पाक इति शब्द्यते ।
भिन्ना एव क्रियाः सर्वाः फलमेकं प्रति स्थिताः ॥ २९८ ॥
पाक इत्युच्यते नान्या क्रिया नामास्ति काचन ।
एतदेव कथं वेद्य एकं फलमभीप्सितम् ॥ २९९ ॥
कथं संपादयेयुस्ताः पूर्वोक्ता एव हेतुतः ।
ननु लोचनदीपार्थमनस्कारैरपि[3] स्फुटम् ॥ ३०० ॥
जन्यते ज्ञानमेकं तत्तथैवात्र भविष्यति ।
सोऽयं कर्दमसंमर्दमलिनीभूतविग्रहः ॥ ३०१ ॥
मरौ मरीचिकाम्भोभिः स्नानेच्छुरभिधावति ।
भिन्नस्वरूपाद्यद्येकमस्ति वस्त्विति संभवः ॥ ३०२ ॥
तर्हि कारणभेदेन न भेदः पारमार्थिकः ।

---

१ रेषिता इति पाठः । २ बाह्य इति पाठः । ३ रवस्कारैरिति पाठः ।

अथ भिन्नस्वरूपं तदेकं चेत्युपगम्यते ॥ ३०३ ॥
स्वभावभेदो भेदायेत्येतत्त्यक्तं व्रतं भवेत् ।
नन्वित्थं सा क्रिया माभूदेका काष्ठादि कारकम् ॥ ३०४ ॥
फलं जनयतामेवमप्यस्तु नहि नः क्षितिः ।
क्रिया हि नाम नास्माकमन्या शक्तिस्त्वसौ यतः ॥ ३०५ ॥
शक्तिश्च फलभित्क्लृप्त्या भावात्मैव विभेदतः ।
सा च शक्तिर्विभोरेव स च विश्वात्मविग्रहः ॥ ३०६ ॥
फलकारकभेदेन न भिन्नः परमार्थतः ।
स्वात्मन्यभिन्नेऽपि विभोरेवं भेदावभासनात् ॥ ३०७ ॥
क्रियाशक्तिरिति प्रोक्ता यया कर्ता महेश्वरः ।
ननु यत्पशवः कुर्युः कथं तदुपपद्यताम् ॥ ३०८ ॥
ते हि भेदैकजीवत्वात्कुर्युर्भेदवतीं क्रियाम् ।
अलमेतेन पशवः कथं कुर्युर्यदि स्फुटम् ॥ ३०९ ॥
स एव स्ववचश्छिन्नो वादो वन्ध्यासुतादिवत् ।
नहि कुम्भकृतः क्वापि कदाचित्कर्तृता भवेत् ॥ ३१० ॥
यदि नासौ महेशाख्यात्कर्तुरन्वयनिरेकभाक् ।
यद्येवं तत्कुलालेन पटोऽपि क्रियते न किम् ॥ ३११ ॥
ननु किंस्वित्कुलालेन कुम्भोऽपि क्रियते ततः ।
ईशस्य विश्वकर्तृत्वे किं पटेऽपि न कर्तृता ॥ ३१२ ॥
नन्वेवं सति नो कर्ता कोऽप्यन्य इति कर्मणाम् ।
शुभाशुभानां स्वफलं कर्तुं कं प्रति हेतुता ॥ ३१३ ॥
एवमेवैतदायुष्मंस्तथाह्येवं विजानताम् ।
न किंचन फलं क्वापि शुभाशुभसमुद्भवम् ॥ ३१४ ॥

इत्थं ये तु न जानन्ति भुञ्जते तेऽविपश्चितः ।
तदेव कर्मसंज्ञं[१] तु मलमज्ञानमूलकम् ॥ ३१५ ॥
एतदेवानुमन्यैव[२] केचित्संवित्तिमात्रकम् ।
संमन्यन्ते ह्यकर्तारं कर्तृत्वानुपपत्तितः ॥ ३१६ ॥
चित्स्वरूपाधिकं ह्यस्य यत्तत्कर्तृत्वमुच्यते ।
तज्ज्ञाड्यमर्पयेदस्मै[३] चिदाधिक्यप्रसङ्गतः ॥ ३१७ ॥
प्रकृतेः कर्तृता पुंसि ननु नामोपचर्यते ।
एतन्न्यायपथापेतैर्वृथा[४] जेगीयते गृहे ॥ ३१८ ॥
उपचारो हि नो वस्तुतथात्वं प्रतिपद्यते ।
व्यपदेशः परं तादृग्वस्तुशून्योऽस्तु तावता ॥ ३१९ ॥
नोपचारिकवह्नित्वव्यपदेशेऽपि मानवः ।
हिमानीशीकरासारवातोत्थशिशिरापहः ॥ ३२० ॥
द्रष्टुः पुंसश्च न द्रष्ट्री प्रकृतिः परिगीयते ।
न चान्योऽस्ति वैराकोऽतः कर्तृभावोपचारकः ॥ ३२१ ॥
किं च प्रयोजनं तस्य कर्तृत्वव्यवहारजम् ।
व्यपदेशस्तु नावस्तु परिवर्तयितुं क्षमः ॥ ३२२ ॥
येऽप्यात्मानं न्यायविदः कर्तारं समुपागमन् ।
तेऽपि प्रश्नमिमं तावदस्माकं प्रतिभार्पितम् ॥ ३२३ ॥
किं यादृग्लोकसंसिद्धकर्तृत्वं कर्मयोगतः ।
स्पन्दात्म तादृग्विभौ स्पन्दहीने समुपपद्यते ॥ ३२४ ॥
ननु ज्ञानं चिकीर्षा च यत्नश्चेति गुणत्रयम् ।
समवैति यदत्रास्य तत्कर्मत्वमुदाहृतम् ॥ ३२५ ॥
इत्थं बालमतीनां धीर्विप्रलभ्येत वञ्चकैः ।

---

१ कार्मेति पाठः । २ अनुमन्यैवेति पाठः ।
३ जात्यमिति पाठः । ४ बंस्केतैरिति पाठः ।

दारका अपि वा विद्युर्न संवेदनवर्जितम् ॥ ३२६ ॥
तत्र ज्ञानं न कर्तृत्वं सर्वत्रास्त्येव तद्यतः ।
इच्छायत्नावपि प्रायः संस्तः सर्वस्य सर्वतः ॥ ३२७ ॥
कुम्भकारो गृहाभावपरितापितचेतनः ।
जानन्निच्छन्सयत्नोऽपि किं कुर्यान्नात्मनो गृहम् ॥ ३२८ ॥
ननु कर्तुं न जानाति ततः कर्तुं न चेच्छति ।
तस्मात्कर्तुं न यतते तद्गृहं कुरुतां कथम् ॥ ३२९ ॥
कर्तुमित्येव यद्रूपं ज्ञानादीनां विशेषणम् ।
करोतेस्तत्र कोऽर्थः स्याद्यदि सस्पन्दता किल ॥ ३३० ॥
तदासौ स्पन्दितुं वेत्ति प्रेप्सतीति भवेद्वचः ।
तच्च स्वात्मगतं नास्य स्पन्दितं वैभवोद्भवात् ॥ ३३१ ॥
अन्यदस्पन्दितं ज्ञानं सर्वस्यापि च संभवेत् ।
ज्ञानेच्छायत्नवत्त्वं च करणं तस्य भाषितम् ॥ ३३२ ॥
आत्मनः कर्तुमित्यस्य ततोऽर्थप्रविवेचने ।
जानातीच्छन्प्रयतते ज्ञातुं यतितुमेषितुम् ॥ ३३३ ॥
प्रत्येकमिति योऽर्थः स कर्तुं वेत्तीति शब्दितः ।
चिकीर्षितृत्वं चैतत्स्यान्न कर्तृत्वं पुनर्भवेत् ॥ ३३४ ॥
तथात्वे मानसैः साम्यं भवेद्वाक्कायकर्मणाम् ।
वाक्कायकर्मभिर्नास्य कथं कर्तृत्वमापतेत् ॥ ३३५ ॥
मानसान्यपि कर्माणि कथं तस्येति गीयताम् ।
तद्गुणत्रयसद्भावे मनोवाक्कायसंभुवाम् ॥ ३३६ ॥
कर्मणां संचितैरेष कर्मभागीति चेन्ननु ।
उपचारोऽयमेवं स्यात्स चात्रस्त्विवति वर्णितम् ॥ ३३७ ॥

१ संस्थ इति पाठः । २ द्वि इति पाठः ।

